सूरिः ॥ १२ । तत्पट्टपूर्वाचलहेलिकेलिर्दीक्षागुरुर्मे जिनचन्द्रसूरिः । व्याख्यारसप्रीणितभूरिभूपश्चातुर्यचर्यामृतविन्दुकूपः ॥ १३ ॥ जिनादिरत्नाग्नि समुद्रसूरिर्गुरुर्गणेऽस्मिन्नथ विद्यमानः । यत्कीर्त्तिकान्ता ककुभां मुखानि, चुम्बन्त्यपि प्राप सतीप्रसिद्धिम् ॥ १४ ॥ श्रीकीर्त्तिरत्नाभिधसूरयोऽस्मिन्, गणे बभूवुर्भुवनप्रसिद्धाः । वाक्सिद्धि-सल्लब्धि-विशुद्धबुद्ध्यादयो गुणाः कस्य मुदे न येषाम् ? ॥१५॥ ज्ञात्वाऽऽजंबभार-दुष्पतपश्चारित्र-तीव्रक्रिया-काठिन्यप्रमुखाश्रमस्कृतिकृतो लोकम्पृणा यद्गुणाः । केषां नाद्भुतदायिनोऽत्र गुणरत्नाचार्यचर्या अमी ?, जीयासुर्गुरुकीर्त्तिरत्नपदवीन्द्रक्षारहीरश्रियः ॥१६॥ तेषां प्रसादादणुधीः प्रयत्नमकार्षमस्मिन् गहने कवीनाम् । जङ्घालतां किं न जगद्विलङ्घने, धत्ते कुरङ्गोऽपि मृगाङ्कसङ्गतः ? ॥१७॥ संसूत्रितं यदुत्सूत्रमत्र मुग्धधिया मया । तत् शुद्धबुद्धिभिः शुद्धं, कार्यं मयि कृपापरैः ॥ १८ ॥* प्रत्यक्षरं गणनया, ज्ञेयानि श्लोकरनुष्टुभाम् । द्वासप्ततिशतान्यस्यामेकपञ्चाऽधिकान्यपि ॥ १९ ॥ वाग्गुरू धवलचन्द्र-ज्ञानमन्दिरसंज्ञकौ । शोधयामासतुर्यत्नादिमां लाक्षणिकोत्तमौ ॥ २० ॥ यावद् भूवलयं समुद्रनिलयं यावत् सुवर्णाचलो, यावत् चन्द्र-रवी नवीनमहसौ यावद्

---

* १७४ पत्रात्मके वटपद्रपत्तनस्थप्राच्यविद्यामन्दिरीयादर्शपुस्तके [क्र. २०८७] इतो निम्ननिर्दिष्टोऽन्तिमोल्लेखः पठ्यते—

(१) "इति श्रीऋषिमंडलवृत्तिः संपूर्णा । शुभं भवतु । कल्याणमस्तु । संवत् १६६३ वर्षे ज्येष्ठमासे शुक्लपक्षे द्वादश्यां तिथौ शनिवारे । महाराजाधिराजमहाराजा श्रीरायसिंहजीविजयराज्ये । श्रीऊपकेशगच्छे वा० देवचंद्र तत्पट्टे वा० ज्ञानकलश तत्पट्टे वा० वीरकलश तत्पट्टाम्भोजविकासदिनमणिवा० विनयकलश तच्छिष्य पं० श्रीश्रीश्रीश्रीश्रीश्रीश्री—चारित्रकलश तच्छिष्य दूदाजी मुनिमहेस लिपतं । शुभं भवतु । श्रेयस्तु ।"

११४ पत्रात्मके तत्रत्ये (क्र. ३००४) चित्रचतुष्टयान्वितेऽन्यस्मिंश्चादर्शपुस्तके प्रान्त्योल्लेख ईदृश उपलभ्यते—

(२) "शुभं भवतु । संवत् १६८० वर्षे कार्तिक वदि ५ दिने भृगुवारे श्रीवृहत्खरतरगच्छे श्रीजिनराजसूरिविजयराज्ये श्रीजिनभद्रसूरिशाखायां



वृत्तिकार-प्रशस्तिः ।

पुष्पिका

जिनाज्ञा शुभा। तावत् शास्त्रमिदं विदग्भहृदयैः पापठ्यमानं बुधैर्भव्यानामनुवासरं हृदि चिदुत्पादाय सञ्जायताम् ॥ २१ ॥ इति श्रीऋषिमण्डलवृत्तिः सम्पूर्णा। लिखिता प्रथमपण्डितजयध्वजगणिप्रवरैः ॥ प्रशस्त्या सह सर्वमन्थाग्रं ( ७५९० अक्षर १२, ( ७७९० ) अक्षर १२, ( ८००० ) ॥ शुभं भवतु कल्याणमस्तु श्रीरस्तु ॥

वृत्तिकारप्रशस्तेः समाप्तिः।



श्रीवाचनाचार्यपद्ममेरुगणि तच्छिष्य वा० श्रीमतिवर्द्धनगणिशिष्य वा० श्रीमेरुतिलकगणितत्सनीर्थ्यं वा० श्रीदयाकलशगणि तच्छिष्य वा० श्रीमदमरमाणिक्यगणि तच्छिष्य पं० क्षमारंगगणि तच्छिष्य वा० रत्नलाभगणीनां पं० राजकीर्तिगणि [ पं० मुनितिलकादि......... ]नां उपकेशवंशीयपारिपगोत्रे श्रीतिम(व)रीपास्तव्य सा० विभभार्या वयजलदे तत्पुत्र सा० थिरा भार्या चंद्रादे तत्पुत्ररत्न सा० नेतसी भार्या रत्नादेनाम्न्या पुत्र सा० गंगा सा० जीवा भ्रातृ पद्मसीप्रमुख पौत्र-देवराजादिसपरिकरया स्वपुण्यार्थं विहरापिता वाच्यमाना चिरं नंद्यात् ॥"

॥ समाप्तमिदं सवृत्तिकं श्रीऋषिमण्डलप्रकरणसूत्रम् ॥